पालनंस्वधर्मस्तेनजीवेत् एतान्येवत्रीणिवैश्यस्य कृषिवाणिज्यपाशुपाल्यकुसीदानिचएतेषांपरिचर्याशूद्रस्यअनियतावृत्तिः
अनियतकेशवेशाः सर्वेषांमुक्तशिखावर्जं अजीवंतस्वधर्मेणान्यतरांपापीयसींवृत्तिमातिष्ठेरन्नतुकदाचिज्ज्यायसीं वन्न्य जीवि
कामास्थायपण्येनजीवं तोःश्मलवणमपण्यपाषाणकोपक्षौमाजिनानिचतांतवस्यरक्तंसर्वं चकृतान्नंपुष्पमूलफलानिचगंध
रसाउदकंचओषधीनांरसः सोमश्चशस्त्रंविषंमांसंचक्षीरंसविकारंअपस्त्रपुजतुसीसंच अथाप्युदाहरंति सद्यः पततिमां
सेनलाक्षयालवणेनच त्र्यहेणशूद्रोभवतिब्राह्मणः क्षीरविक्रयात् ग्राम्यपशूनामेकशफाः केशिनश्चसर्वेचारण्याः पशवो
वयांसिदंष्ट्रिणश्च धान्यानांतिलानाहुः अथाप्युदाहरंति भोजनाभ्यंजनाद्दानाद्यदन्यत्कुरुतेतिलैः कृमिभूतः सविष्ठायां
पितृभिः सहमज्जति कामंवास्वयंकृष्योत्पाद्यतिलान्विक्रीणीरन् तस्माद्दाभ्यामनस्यातां भ्यांप्राक्प्रातराशात्कर्षीस्यात्
निदाघयः प्रयच्छेननातिपीडनलांगलं प्रकीरवसुखेवंशामपिसहतदुद्वपतिगामविभ्रंहर्ष्यंचपीवरीं प्रस्थद्व्यवाहनंलांगलं प्र
वीर वद्वीरंमनुष्यवदनलुब्धतास्कशे कल्याणीत्यस्यनासिकोद्वयोतदूरपविद्धतिसोमपिष्टरुसोमोत्थस्यप्राप्नोति तत्सहत
दुद्वपतिगामरिमा अज्ञानस्वनरवररवरोष्ट्राणांचशफवांश्चदर्शनीयांपीवरींकल्याणींप्रथमद्युवर्तांकथंहि लांगूलसुद्वपे दन्य
त्रधान्यविक्रयान्नरसारसैः समतोहानतोवानिमातव्यानलवणंरसैः तिलतंडुलपक्वान्नंविद्यान्मनुष्याश्च विहिताः प

रिवर्तकेन ब्राह्मणराजन्यौवार्द्धुषान्नंनादद्यातां अथाप्युदाहरंति समर्घंधान्यमुद्धृत्यमहार्घंयःप्रयच्छति सवैवार्धुषिकोनामब्र
ह्मवादिषुगर्हितः वार्धुषिंब्रह्महंतारंतुलयासमतोलयत् अतिष्ठन्भ्रूणहाकोट्यांवार्धुषिर्न्यकंपत कामंवापरिलुप्तकृत्यायपा
पीयसे दद्यातांद्विगुणंहिरण्यंत्रिगुणंधान्यंधान्येनैवरसाव्याख्याताः पुष्पमूलफलानिचतुलाघृतमष्टगुणं अथाप्युदाहरति
राज्ञाऽनुमतभावेनद्रव्यवृद्धिंविनाशयेत् पुराराजाभिषेकेणद्रव्यवृद्धिंचवर्जयेत् द्विकंत्रिकंचतुर्थंचपंचकंचशतंस्मृतं मासस्य
वृद्धिंगृण्हीयाद्वर्णानामनुपूर्वशः वशिष्ठवचनंप्रोक्तांवृद्धिंवार्धुषिकशृणु पंचमाषांस्तुविंशत्याएवंधर्मोनहीयते इतिवा
सिष्ठेधर्मशास्त्रेद्वितीयोऽध्यायः २ अश्रोत्रियाअननुवाक्याअनग्नयः शूद्रधर्माणोभवंति नानृग्ब्राह्मणोभवतिमानवंचात्र
श्लोकमुदाहरंति योनधीत्यद्विजोवेदमन्यत्रकुरुतेश्रमम् सजीवन्नेवशूद्रत्वमाशुगच्छतिसान्वयः १ नवणिक्कुसीदलवः
येचशूद्रप्रेषणंकुर्वंतिनस्तेनोनचिकित्सकः अव्रताह्यनधीयानायत्रभैक्ष्यचराद्विजाः तंग्रामंदंडयेद्राजाचोरभक्तप्रदोहि
सः चत्वारोपित्रयोवापियद्ब्रूयुर्वेदपारगाः सधर्मइतिविज्ञेयोनेतरेषांसहस्रशः अव्रतानाममंत्राणांजातिमात्रोपजीविनां
सहस्रशःसमेतानांपर्षत्त्वंनैवविद्यते यद्वदंत्यन्यथाभूत्वामूर्खाधर्ममतद्विदः तत्पापंशतधाभूत्वातद्वक्तृषुतुगच्छति श्रोत्रि
यायैवदेयानिहव्यकव्यानिनित्यशः अश्रोत्रियायदत्तानितृप्तिंनायांतिदेवताः यस्यचैवगृहेमूर्खोदूरेचैवबहुश्रुतः बहुश्रु

तायदातव्यंनास्तिमूर्खे व्यतिक्रमात् ब्राह्मणातिक्रमोनास्तिमूर्खेवेदविवर्जिते ज्वलंतमग्निमुत्सृज्यनहिभस्मनिहूयते यश्चकाष्ठ
मयोहस्तीयश्चचर्ममयोमृगः यश्चविप्रोनधीयानस्त्रयस्तेनामधारकाः विद्वद्भोज्यानिचान्यानिमूर्खवारोष्ट्रेषुभुंजते तदन्ननाश
मायातिमहच्चापिभयंभवेत् अप्रज्ञायमानवित्तंयोधिगच्छेद्राजातद्धरेत् अधिगंत्रेषष्ठमंशंप्रदाय ब्राह्मणश्चेदधिगच्छेत् षट्क
र्मस्थवर्तमानोनराजाहरेत् आततायिनंहत्वानात्रप्राणच्छेत्तुः किंचित्किल्बिषमाहुः षड्विधास्त्वाततायिनः अथाप्युदाहरंति अ
ग्निदोगरदश्चैवशस्त्रपाणिर्धनापहः क्षेत्रदारहरश्चैवषडेतेआततायिनः आततायिनमायांतमपिवेदांतपारगं जिघांसंतंजिघां
सीयान्नतेनब्रह्महाभवेत् स्वाध्यायिनंकुलेजातंयोहन्यादाततायिनं नतेनभ्रूणहासस्यान्मन्युस्तंमृत्युमृच्छति त्रिणाचिकेतः
पंचाग्निस्त्रिसुपर्णवान् चतुर्मेधावाजसनेयीषडंगविद्ब्रह्मदेयानुसतानः छंदोगोज्येष्ठसामगोमंत्रब्राह्मणवित् यस्यधर्मान
धीतेयस्यचदशपुरुषमातृपितृवंशः श्रोत्रियोविज्ञायतेविद्वांसःस्नातकाश्चेतिपंक्तिपावनाः चातुर्विद्यविकल्पीचअंगविद्धर्मपाठकः
आश्रमस्थास्त्रयोमुख्यापरिषत्स्याद्दशावरा उपनीयतुयःशिष्यंवेदमध्यापयेत्सआचार्यः यस्त्वेकदेशंसउपाध्यायोयश्चवेदां
गानि आत्मत्राणेवर्णसंकरेवाब्राह्मणवैश्योशस्त्रमाददीयातां क्षत्रियस्यतुतन्नित्यमेवरक्षणाधिकारात् प्राग्वोदग्वासीनः
प्रक्षाल्यपादोपाणीचामणिबंधनात् अंगुष्ठमूलस्योत्तरतोरेखाब्राह्मंतीर्थंतेनत्रिराचामे दशब्दवत् द्विःप्रमृज्यात्खान्यद्भिः

संस्पृशेत् मूर्द्धन्यपोनिनयेत् सव्येचपाणौव्रजंस्तिष्ठन् शयानःप्रणतोवानाचामेत् हृदयंगमाभिरद्भिरबुद्बुदाभिर्ब्राह्मणः
कंठगाभिःक्षत्रियःशुचिः वैश्योद्भिःप्राशिताभिस्तुस्त्रीशूद्रौस्पृष्टाभिरेवच पुत्रद्वाराऽपियागास्तर्पणानिस्युः नवर्णगंधरस
दुष्टाभिर्याश्चस्युरशुभागमाः नमुख्याविप्रुषउच्छिष्टंकुर्वंति अनंगश्लिष्टाः सुप्त्वाभुक्त्वापीत्वास्नात्वाचाचांतःपुनराचामेत्
वासश्चपरिधायओष्ठौसंस्पृश्ययत्रालोमकौन्श्मश्रुगतोलेपोदंतवद्दंतसक्तेषुयच्चांतर्मुखेभवेदाचांतस्यावशिष्टंस्यान्निगिरन्ने
वतच्छुचिः परानप्याचामयतःपदौयाविप्रुषोगताः भूम्यातास्तुसमाःप्रोक्तास्ताभिर्नोच्छिष्टभाग्भवेत् प्रचरन्नभ्यवहार्ये
षुउच्छिष्टंयदिसंस्पृशेत् भूमौनिक्षिप्यतद्द्रव्यमाचांतःप्रचरेत्पुनः यद्यन्मीमांस्यंस्यात्तत्तदद्भिःसंस्पृशेत् श्वहताश्चमृगावन्यापा
तितंचखगैः फलंबालैरनुपविद्धान्तःस्त्रीभिराचरितंचयत् परिसंख्याय तान्सर्वानशुचीनाहप्रजापतिः प्रसारितंचयत्पण्यं
येदोषाःस्त्रीमुखेषुच मशकैर्मक्षिकाभिश्चनीलीयेन्नोपहन्यते क्षितिस्थाश्चैवयाआपोगवांप्रीतिकराश्चयाः परिसंख्या
यतान्सर्वान्शुचीनाहप्रजापतिरिति लेपगंधापकर्षणं शौचममेध्यलिप्तस्य अद्भिर्मृदाचतैजसमृण्मयदारवतांतवानांभ
स्मपरिमार्जनंप्रदाहतक्षणनिर्णेजनानि तैजसवदुपलमणीनांमणिवच्छंखशुक्तीनांदारुवदस्थ्नां रज्जुविदलचर्मणांचेल
वच्छौचं गोवालैःफलचमसानां गौरसर्षपकल्केनक्षौमजानां भूम्यास्तुसंमार्जनप्रोक्षणोपलेपनोल्लेखनैर्यथास्थानंदोषवि

शेषात्प्राजापत्यमुपैति अथाप्युदाहरंति खननाद्दहनाद्वर्षाद्गोभिराक्रमणादपिचतुर्भिः शुध्यतेभूमिः पंचमाच्चोपलेखनात्
रजसाशुध्यतेनारीनदीवेगेनशुध्यति भस्मनाशुध्यतेकांस्यंताम्रमम्लेनशुध्यति मद्यैर्मूत्रैःपुरीषैर्वाश्लेष्मपूयाश्रुशोणितैः सं
स्पृष्टंनैवशुध्येत्पुनःपाकान्महीमयं अद्भिर्गात्राणिशुध्यंतिमनःसत्येनशुध्यति विद्यातपोभ्यांभूतात्माबुद्धिर्ज्ञानेनशुध्यति
अद्भिरेवकांचनंपूयतेतथाराजतं अंगुलिकनिष्ठिकामूलेदैवंतीर्थं अंगुल्यग्रेमानुषंपाणिमध्यआग्नेयम् प्रदेशिन्यंगुष्ठयोरंतरापित्र्य
रोचंतइति सायंप्रातरशनान्यभिपूजयेत् स्वदितमितिपित्र्येषु संपन्नमित्याभ्युदयिकेषु इतिवासिष्ठधर्मशास्त्रेतृतीयोऽध्यायः३
प्रकृतिविशिष्टंचातुर्वर्ण्यंसंस्कारविशेषाच्च ब्राह्मणोस्यमुखमासीद्बाहूराजन्यःकृतः ऊरूतदस्ययद्वैश्यःपद्भ्यांशूद्रोऽजायते
तिनिगमोभवति गायत्र्याछंदसाब्राह्मणमसृजत् त्रिष्टुभाराजन्यंजगत्यावैश्यंनकेनचिच्छंदसाशूद्रमित्यसंस्कार्योविज्ञायते
त्रिष्वेवनिवासः स्यात्सर्वेषांसत्यमक्रोधोदानमहिंसाप्रजननंच पितृदेवतातिथिपूजायांपशुंहिंस्यात् मधुपर्केचयज्ञेचपितृदैव
तकर्म्मणि अत्रैवचपशुंहिंस्यान्नान्यथेत्यब्रवीन्मनुः नाकृत्वाप्राणिनांहिंसांमांसमुत्पद्यतेक्वचित् नचप्राणिवधःस्वर्ग्यस्तस्मा
द्यागेवधोऽवधः अथापिब्राह्मणायवाराजन्यायवा अभ्यागतायवामहोक्षंवामहाजंवापचेत् एवमस्यातिथ्यंकुर्वंतीतिउदकक्रि
यामशौचंचद्विवर्षात्प्रभृतिमृतउभयंकुर्यात् दंतजननादित्येके शरीरमग्निनासंयोज्य अनवेक्षमाणाअपोभ्यवयंतिततस्तत्रस्थाए

वसव्योत्तराभ्यांपाणिभ्यामुदकक्रियांकुर्वंति अयुग्मादक्षिणामुखाः पितॄणांवाएषादिक् यादक्षिणागृहान्व्रजित्वास्वस्तरेअहम
श्नतआसीरन् अशक्तौक्रीतोत्पन्नेनवर्तेरन् दशाहंशावमाशौचंसपिंडेषुविधीयते मरणात्प्रभृतिदिवसगणनासपिंडतासप्तपु
रुषंविज्ञायते अप्रत्तानांस्त्रीणांत्रिपुरुषंत्रिदिनंविज्ञायते प्रत्तानामितरेकुर्वीरन्तांश्चतेषांजननेप्येवमेवनिपुणांशुद्धिमिच्छतां
मातापित्रोर्बीजनिमित्तत्वात् अथाप्युदाहरंति नाशौचंसूतकेपुंसःसंसर्गंचेन्नगच्छति रजस्तत्राशुचिर्ज्ञेयंतच्चपुंसिनविद्यते
ब्राह्मणोदशरात्रेणपक्षमात्रेणभूमिपः विंशतिरात्रेणवैश्यः शूद्रोमासेनशुद्ध्यति अशौचेयस्तुशूद्रस्यसूतकेवापिभुक्तवान् स
गच्छेन्नरकंघोरंतिर्यग्योनिषुजायते अनिर्दशाहेपक्वान्नंनियोगाद्यस्तुभुक्तवान् क्रिमिर्भूत्वासदेहांतेतद्विष्ठामुपजीवति द्वा
दशमासान्द्वादशार्द्धमासान्वाऽनश्नन्संहितामधीयानः पूतोभवतीतिविज्ञायते ऊनद्विवर्षेप्रेतेगर्भपतनेवासपिंडानांत्रिरात्रमा
शौचंसद्यःशौचमितिगौतमः देशांतरस्थेप्रेतेऊर्ध्वंदशाहाच्चैकरात्रमाशौचं आहिताग्निश्चेत्प्रवसन्म्रियेतपुनःसंस्कारंकृत्वाशव
वच्छौचमितिगौतमः यूपयति श्मशानरजस्वलासूतिकाशुचीनुपस्पृश्यसशिराअभ्युपेयादपः इतिवसिष्ठेचतुर्थोऽध्यायः४
अस्वतंत्रास्त्रीपुरुषप्रधानाअनग्निरनुदक्याच अनृतमितिविज्ञायते अथाप्युदाहरंति पितारक्षतिकौमारेभर्तारक्षतियौवने
पुत्राश्चस्थाविरेभावेनस्त्रीस्वातंत्र्यमर्हति तस्याभर्तुरभिचारउक्तः प्रायश्चित्तरहस्येषु मासिमासिरजोह्यासांदुष्कृतान्यपक

र्षति त्रिरात्रं रजस्वला ऽशुचिर्भवति सा नाञ्ज्यान्नाभ्यंज्यान्नाप्सु स्नायात् अधः शयीत न दिवा न स्वप्यात् नाग्निं स्पृशेत् न रज्जुं सृजेत् न दंतान्धावयेन्न मांसमश्नीयात् न ग्रहान्निरीक्षयेत् न हसेन्न किंचिदाचरेत् न खर्वेण पिबेन्नांजलिना वा न लोहितायसेन वा वि ज्ञायते हीन्द्रस्त्रिशीर्षं त्वाष्ट्रं हत्वा पाप्मना गृहीतो मन्यत इति तं सर्वाणि भूतान्यभ्याक्रोशन् भ्रूणहन् भ्रूणहन् भ्रूणहन्नि ति स स्त्रिय उपाधावत् अस्यै मे ब्रह्महत्यायै तृतीयं भागं गृह्णीतेति गत्वैवमुवाच ता अब्रुवन् किं नो भूदिति सोब्रवीद्वरं वृणीध्वमिति ता अब्रुवन् ऋतौ प्रजां विंदामहै इति कामं मा विजानीमो ऽभवामेति यथेच्छया आप्रसवकालात्पुरुषेण सह मैथुनभावेन संभवा म इति एको ऽस्माकं वरस्तथेंद्रेणोक्तास्ताः प्रतिजगृहुः तृतीयं भ्रूणहत्याया अस्यैषा भ्रूणहत्या मासि मास्याविर्भवति तस्माद्रज स्वलान्नं नाश्नीयात् अतश्च भ्रूणहत्याया एवैतद्रूपं प्रतिमुच्यास्ते कंचुकमिव तदाहुर्ब्रह्मवादिनः अंजनाभ्यंजनमेवास्या न प्रतिग्राह्यं तद्धि स्त्रियोन्नमिति तस्मात्तस्यास्तत्रेन च मन्यंते आचारायाश्च योषित इति सेयमुपयाति उदक्यास्त्वासते ते षां ये च केचिदनग्नयः गृहस्थाः श्रोत्रिया एषां सर्वे ते सर्वधर्मिणः इति वासिष्ठे पंचमो ऽध्यायः ५ आचारः परमो धर्मः सर्वेषामिति नि श्चयः हीनाचारपरीतात्मा प्रेत्य चेह च नश्यति नैनं प्रयांति न ब्रह्म नाग्निहोत्रं च दक्षिणा हीनाचारसितं भ्रष्टं तारयंति कथं च न आचारहीनं न पुनंति वेदा यद्यप्यधीताः सह षड्भिरंगैः छंदांस्येनं मृत्युकाले त्यजंति नीडं शकुंता इव तापतप्ताः आचारहीनस्य

तुब्राह्मणास्यवेदाःषडंगाअखिलाःसपक्षाः कांप्रीतिमुत्पादयितुंसमर्थाअंधस्यदाराइवदर्शनीयाः नैनंछंदांसिवृजिनात्तार
यंतिमायाविनंमाययावर्त्तमानम् तत्राक्षरेसम्यगधीयमानेपुनातितद्ब्रह्मयथावदिष्टम् दुराचारोहिपुरुषोलोकेभवतिनिंदितः
दुःखभागीचसततंव्याधितोल्पायुरेवच आचारःफलतेधर्ममाचारःफलतेधनं आचाराच्छ्रियमाप्नोति आचारोहंत्यलक्षणं
सर्वलक्षणहीनोपियःसदाचारवान्नरः श्रद्दधानोनसूयश्चशतवर्षाणिजीवति आहारनिर्हारविहार योगाःसुसंवृताधर्मवि
दातुकार्याः वाग्बुद्धिवीर्याणितपस्तथैवधनायुषीगुप्ततमेतुकामे उभेमूत्रपुरीषेतुदिवाकुर्यादुदङ्मुखः रात्रौकुर्याद्दक्षि
णास्यएवंह्यायुर्नहीयते प्रत्यग्निंप्रतिसूर्यंचप्रतिगांप्रतिचद्विजम् प्रतिसोमोदकंसंध्यांप्रज्ञानश्यतिमेहतः नमद्यामेहनंकु
र्यान्नभस्मनिनगोमये नवाकृष्टेनमार्गेचनोप्तक्षेत्रेनशाड्वले छायायामंधकारेवारात्रावहनिवाद्विजः यथासुखमुखःकु
र्यात्प्राणबाधभयेषुच उद्धृताभिरद्भिःकार्यंकुर्यात्स्नानमनुद्धृताभिरपिआहरेन्मृत्तिकांविप्रःकूलात्ससिकतात्तथा अंतर्ज
लेदेवगृहवल्मीकमूषिकस्थले कृतशौचावशिष्टाचनग्राह्याःपंचमृत्तिकाः एकालिंगेकरेतिस्रउभाभ्यांद्वेतुमृत्तिके पंचापा
नेदशैकस्मिन्नुभयोःसप्तमृत्तिकाः एतच्छौचंगृहस्थस्यद्विगुणंब्रह्मचारिणः वानप्रस्थस्यत्रिगुणंयतीनांतुचतुर्गुणं अष्टौ
ग्रासामुनेर्भक्तंवानप्रस्थस्यषोडश द्वात्रिंशत्तुगृहस्थस्यअमितंब्रह्मचारिणः अनड्वान्ब्रह्मचारीचआहिताग्निश्चतेत्रयः भुं

ज्ञानाएवसिद्ध्यंतिनैषांसिद्धिरनश्नतां तपोदानोपहारेषुव्रतेषुनियमेषुच इज्याध्ययनधर्मेषुयोनोक्तः सविनिष्क्रियः योगस्त
पोदमोदानंसत्यंशौचंदयाश्रुतं विद्याविज्ञानमास्तिक्यमेतद्ब्राह्मणलक्षणं सर्वत्रदांताः श्रुतिपूर्णकर्णाजितेंद्रियाः प्राणिव
धेनिवृत्ताः प्रतिगृहेसंकुचिताग्रहस्थास्तेब्राह्मणास्तारयितुंसमर्थाः असूयः पिशुनश्चैवकृतघ्नोदीर्घरोषकः चत्वारः कर्मचांड
लाजन्मतश्चापिपंचमः दीर्घवैरमसूयांचअसत्यंब्रह्मदूषणं पैशून्यंनिर्दयत्वंचजानीयाच्छूद्रलक्षणं किंचिद्वेदमयंपात्रंकिं
चित्पात्रंतपोमयं पात्राणामपितत्पात्रंशूद्रान्नंयस्यनोदरे शूद्रान्नरसपुष्टांगः अधीयानोपिनित्यशः जुह्वत्वापियजित्वा
पिगतिमूर्ध्वांनविंदति शूद्रान्नेनोदरस्थेनयः कश्चिन्म्रियतेद्विजः सभवेच्छूकरोग्राम्यस्तस्यवाजायतेकुले शूद्रान्नेनतुभु
क्तेनमैथुनंयोधिगच्छति यस्यान्नंतस्यतेपुत्रा नचस्वर्गार्हकोभवेत् स्वाध्यायाढ्यंयोनिमित्रंप्रशांतंचैतन्यस्थंपापभीरुंब
हुज्ञं स्त्रीयुक्तान्नंधार्मिकंगोशरण्यंव्रतैःक्षांतंतादृशंपात्रमाहुः आमपात्रेयथान्यस्तंक्षीरंदधिघृतंमधु विनश्येत्पात्रदौर्ब
ल्यात्तच्चपात्रंरसाश्चते एवंगांचहिरण्यंचवस्त्रमश्वंमहींतिलान् अविद्वान्प्रतिगृण्हानोभस्मीभवतिदारुवत् नांगनखवा
दित्रंकुर्यान्नचापोंजलिनापिबेत् नपादेननपाणिनावाराजानमभिहन्यात् नजलेनजलंनेष्टकाभिः फलानिपातयेत् नफले
नफलंनकल्कपुटकोभवेत् नम्लेच्छभाषांशिक्षेत् अथाप्युदाहरंति नपाणिपादचपलोननेत्रचपलोभवेत् नचांगचप

लोधिमइतिशिष्टस्यगोचरः पारंपर्यागतोयेषांवेदःसपरिबृंहणः तेशिष्टाब्राह्मणाज्ञेयाश्रुतिप्रत्यक्षहेतवः यन्नंसंतंनचासंतं
नाश्रुतंनबहुश्रुतं नसुवृत्तंनदुर्वृत्तंवेदकश्चित्सब्राह्मणः सब्राह्मणइति इतिवासिष्ठेषष्ठोऽध्यायः ६ चत्वारआश्रमाब्र
ह्मचारीगृहस्थवानप्रस्थपरिव्राजकाः तेषांवेदमधीत्यवेदौवावेदान्वाऽविशीर्णब्रह्मचर्योयमिच्छेत्तमावसेत् ब्रह्मचार्याचा
र्यंपरिचरेत् आशरीरविमोक्षणात् आचार्येप्रमीतेअग्निंपरिचरेत् विज्ञायतेहितवाग्निराचार्यइति संयतिवाक्चतुर्थषष्ठा
ष्टमकालभोजीभैक्षमाचरेत् गुर्वधीनोजटिलःशिखाजटोवागुरुंगच्छंतमनुगच्छेत् आसीनंचाननुतिष्ठेत् शयानंचासी
नोपविशेत् आहूताध्यायीसर्वंभैक्ष्यंनिवेद्य तदनुज्ञयाभुंजीतखट्वाशयनदंतप्रक्षालनाभ्यंजनवर्जस्तिष्ठेत् अहनिरात्रा
वासीतत्रिःकृत्वाभ्युपेयादपोभ्युपेयादपः इतिवासिष्ठेसप्तमोऽध्यायः ७ गृहस्थोविनीतक्रोधहर्षोगुरुणानुज्ञातःस्ना
त्वाऽसमानार्षामस्पृष्टमैथुनांयवीयसींसदृशींभार्यांविंदेत् पंचमींमातृबंधुभ्यःसप्तमींपितृबंधुभ्यः वैवाह्यमग्निमिंध्यात्
सायमागतमतिथिंनावरुंध्यात् नास्यानश्नन्गृहेवसेत् यस्यनाश्नातिवासार्थीब्राह्मणोगृहमागतः सुकृतंतस्ययत्किंचि
त्सर्वमादायगच्छति एकरात्रंतुनिवसन्नतिथिर्ब्राह्मणःस्मृतः अनित्यंहिस्थितिर्यस्मात्तस्मादतिथिरुच्यते नैकग्रामीणमतिथिं
विप्रंसांगतिकंतथा कालेप्राप्तेअकालेवानास्यानश्नन्गृहेवसेत् श्रद्धाशीलःस्पृहा लुरलमग्न्याधेयायनानाहिताग्निःस्यात्

अलंचसोमपानायनासोमयाजीस्यात् युक्तः स्वाध्यायेप्रजननेयज्ञेचगृहेष्वभ्यागतंप्रत्युत्थानासनशयनवाक् सूनृताभिर्मानयेत्
यथाशक्तिचान्नेनसर्वभूतानिगृहस्थएवयजतेगृहस्थस्तप्यतेतपः चतुर्णामाश्रमाणांतुगृहस्थस्तुविशिष्यते यथानदीनदाःसर्वे
समुद्रेयांतिसंस्थितिं एवमाश्रमिणःसर्वेगृहस्थेयांतिसंस्थितिं यथामातरमाश्रित्यसर्वेजीवंतिजंतवः एवंगृहस्थमाश्रित्यस
र्वेजीवंतिभिक्षवः नित्योदकीनित्ययज्ञोपवीतीनित्यस्वाध्यायीपतितान्नवर्जी ऋतौगच्छन्विधिवच्चजुह्वन्नब्राह्मणाश्च्यवत
ब्रह्मलोकात् ब्रह्मलोकादिति इतिवासिष्ठेऽष्टमोऽध्यायः ८ वानप्रस्थोजटिलश्चीराजिनवासाग्रामंचनविशेत् नफालकृ
ष्टमधितिष्ठेत् अकृष्टमूलफलंसंचिन्वीत ऊर्ध्वरेताःक्षमाशयोमूलफलभैक्षेणाश्रमागतमतिथिमर्चयेत् दद्यादेवनप्रतिगृह्णी
यात् त्रिषवणमुदकमुपस्पृशेत् श्रावणकेनाग्निमाधायाहिताग्निःस्याद्वृक्षमूलिकः ऊर्ध्वंषड्भ्योमासेभ्योनग्निरनिकेतः दद्याद्दे
वपितृमनुष्येभ्यः सगच्छेत्स्वर्गमानंत्यमानंत्यम् इतिवासिष्ठेनवमोऽध्यायः ९ परिव्राजकाः सर्वभूताभयदक्षिणांद
त्त्वाप्रतिष्ठेत् अथाप्युदाहरंति अभयंसर्वभूतेभ्योदत्त्वाचरतियोद्विजः तस्यापिसर्वभूतेभ्योनभयंजातुविद्यते अभयंसर्व
भूतेभ्योदत्त्वायस्तुनिवर्तते हंतिजातानजातांश्चप्रतिगृह्णातियस्यच एकाक्षरंपरंब्रह्मप्राणायामःपरंतपः उपवासात्परंभैक्ष्यं
दयादानाद्विशिष्यते मुंडोऽममत्वपरिग्रहःसप्तागाराण्यसंकल्पितानि चरेद्भैक्ष्यंविधूमेसन्नमुसले एकशाटीपरिवृतोऽजिनेन

वागोमल्कलैस्तृणैर्वैष्टितशरीरः स्थंडिलशाय्यनित्यांवसतिंवसेत तथाग्रामांतेदेवगृहेशून्यागारेवृक्षमूलेवामनसाज्ञानमधीयमा
नः नग्राम्यपशूनांसंदर्शनेविहरेत अथाप्युदाहरंति अरण्यनित्यस्यजितेंद्रियस्यसर्वेंद्रियप्रीतिनिवर्तकस्य अध्यात्मचिंतागत
मानसस्यध्रुवाह्यनावृत्तिरुपेक्षकस्य अव्यक्तलिंगोव्यक्ताचारः अनुन्मत्तउन्मत्तवेषः अथाप्युदाहरंति नशब्दशास्त्राभिरतस्य
मोक्षोनचापिलोकग्रहणेरतस्य नभोजनाच्छादनतत्परस्यनचापिरम्यावसथप्रियस्य नचोत्पातनिमित्ताभ्यांननक्षत्रांगविद्य
या अनुशासनवादाभ्यांभिक्षांलिप्सेतकर्हिचित् अलाभेनविषादीस्याल्लाभश्चैवंननहर्षयेत् प्राण यात्रिकमात्रस्यान्मात्रा
संगाद्विनिर्गतः नकुट्यांनोदकेसंगेनचैलेनत्रिपुष्करे नागारेनासनेनात्रयःसर्वेमोक्षवित्तमः ब्राह्मणकुलेवायल्लभेत्तद्भुंजीतसा
यंमधुमांससर्पिपरिवर्जयतीन्साधून्वागृहस्थः पीतेनचतृप्येत् ग्रामेवावसेत् अजिम्हः अशरणः अशंकश्चकः नचेंद्रियसंयोगंकु
र्वीत केनचित् उपेक्षकः सर्वभूतानांहिंसानुग्रहपरिहारेणपैशून्यमत्सराभिमानाहंकाराश्रद्धानार्जवात्मस्तवपरगर्हादंभलोभमोह
क्रोधविवर्जनंसर्वाश्रमिणांधर्मइष्टोयज्ञोपवीत्युदककमंडलुहस्तः शुचिर्ब्राह्मणोवृषलान्नवर्जीनहीयतब्रह्मलोकाद्ब्रह्मलोका
त् इतिवासिष्ठेधर्मशास्त्रेदशमोऽध्यायः १० षट्कर्म्मागृहदेवताभ्योबलिंहरेत् श्रोत्रियायान्नंदत्वाब्रह्मचारिणेवा नंतरंपितृभ्यो
दद्यात्ततोऽतिथिंभोजयेत् स्वशक्त्यासमानुपूर्व्येणस्वगृह्याणांकुमारबालवृद्धतरुणप्रभृतींस्ततोपरानगृह्यान् श्वचांडालपतित

गायसेभ्योप्सौनिर्वपेच्छूद्रेभ्यउच्छिष्टं वादद्याच्छेषं यतोभुंजीत सर्वोप्ययोगेनपुनः पाकोयदिनिरुक्तेवैश्वदेवे ॥ तिथिरागच्छेद्वि
शेषेणास्मा अन्नंकारयेद्दिजानये ॥ न्हिवैश्वानरः प्रविशत्यतिथिर्ब्राह्मणोगृहं तस्मादप्ययानमन्यत्रवर्षाभ्यस्तांहिशान्तिजनावि
द्धिरितितंभोजयित्वोपसीतासीमान्तादनुव्रजेदनुज्ञाताद्वाप रपक्षाऊर्ध्वंचतुर्थ्यांपितृभ्योदद्यात् पूर्वेद्युर्ब्राह्मणान्सन्निपात्यय
तीन् गृहस्थान्साधून्वापरिणतवयसो ॥ विकर्मस्थान् श्रोत्रियान् शिष्यानन्तेवासिनः शिष्यानपिगुणवतोभोजयेद्विलमन्नश्रुकुवि
गृधिश्यावदंतकुष्ठिकुनखिवर्जम् अथाप्युदाहरंति अथचेन्मन्त्रविद्युक्तः शारीरैःपङ्क्तिदूषणैः अदूष्यंतंयमः प्राहपंक्तिपा
वनएवसः श्राद्धेनोद्वासनीयानिउच्छिष्टान्यादिनक्षयात् स्वंपतन्तिहियाधारास्ताः पिबंत्यकृतोदकाः उच्छिष्टेनप्रपुष्टास्तेया
वन्नास्तमितोरविः क्षीरधारास्ततोयान्त्यक्षय्याः संचरभागिनः प्राक्संस्कारप्रमीतानांप्रवेशनमितिश्रुतिः भागधेयंमनुःप्राहउ
च्छिष्टोच्छेषणेउभे उच्छेषणंभूमिगतंविकिरेल्लेपसोदकं अनुप्रेतेषुविसृजेदप्रजानाममनायुषां ॥ उभयोः शाखयोर्मुक्तंपितृभ्योऽन्न
निवेदनम् तदन्तरमुपासीतेत्यक्षरादुष्टचेतसः तस्मादशून्यहस्तेनकुर्यादन्नमुपागतं भोजनंवासमालभ्यतिष्ठतीच्छेषणेउभे ॥ द्वौ
दैवेपितृकृत्येत्रीनेकैकमुभयत्रवा ॥ भोजयेत्सुसमृद्धोपि नप्रसज्यातविस्तरेत् क्रियांदेशकालौचशौचंब्राह्मणसंपदः पंचैता
नविस्तरोहंतितस्मात्तंपरिवर्जयेत् अपिवाभोजयेदेकंब्राह्मणंवेदपारगम् शुभशीलोपसंपन्नंसर्वलक्षणवर्जितं यद्येकंभोज

येच्छ्राद्धेदैवंतत्रकथंभवेत् अन्नंपात्रेसमुद्धृत्यसर्वस्यप्रकृतस्यतु देवतायतनेकृत्वाततःश्राद्धंप्रवर्त्तते प्रास्येदग्नौतदन्नंतुदद्या
द्वाब्रह्मचारिणे यावदुष्णंभवत्यन्नंयावदश्नंतिवाग्यताः तावद्धिपितरोऽश्नंतियावन्नोक्ताहविर्गुणाः हविर्गुणानवक्तव्याःपितरो
भ्यवतर्पिताःपितृभिस्तर्पितैःपश्चात्वक्तव्यंशोभनंहविः नियुक्तस्तुयदाश्राद्धेदैवेतंतुसमुत्सृजेत् यावंतिपशुरोमाणितावन्नरक
मृच्छति त्रीणिश्राद्धेपवित्राणिदौहित्रःकुतुपस्तिलाः त्रीणिचात्रप्रशंसंतिशौचमक्रोधमत्वरां दिवसस्याष्टमेभागेमंदीभवति
भास्करः सकालःकुतुपोनामपितृणांदत्तमक्षयं श्राद्धंदत्वाचभुक्त्वाचमैथुनंयोऽधिगच्छति भवंतिपितरस्तस्यतन्मासंरेत
सोभुजः यतस्ततोजायतेचदत्वाभुक्त्वाचपैतृकं नसुविद्यामवाप्नोतिक्षीणायुश्चैवजायते पितापितामहश्चैवतथैवप्रपिता
महः उपासतेसुतंजातंशकुन्ताइवपिप्पलं मधुमांसैश्चशाकैश्चपयसापायसेनवा अधुनादास्यतिश्राद्धंवर्षासुचमघा
सुच संतानवर्द्धनंपुत्रंतृप्यन्तंपितृकर्मणि देवब्राह्मणसंपन्नमभिनन्दंतिपूर्वजाः नंदंतिपितरस्तस्यसुवृष्टैरिवकर्षकाः
यद्गयास्थोददात्यन्नंपितरस्तेनपुत्रिणः श्रावण्याग्रहायण्योश्चाष्टका यांचपितृभ्योदद्याद्द्रव्यदेशब्राह्मणसन्निधानेवाका
लेनियमोऽवश्यंयोब्राह्मणोऽग्निमादधीत दर्शपूर्णमासाग्रयणेष्टिचातुर्मास्यपशुसोमैश्चयजते नैयमिकंह्येतदृणंसंस्तुतं
चविज्ञायतेहित्रिभिर्ऋणैर्ऋणवान् ब्राह्मणोजायते यज्ञेनदेवेभ्यःप्रजयापितृभ्योब्रह्मचर्येणऋषिभ्यः इत्येषवा अनृणो

यज्वायः पुत्रीब्रह्मचर्य्यवानितिगर्भाष्टमेषुब्राह्मणमुपनयीतगर्भैकादशेषुराजन्यंगर्भद्वादशेषुवैश्यं पालाशोदंडोबैल्वोवा ब्राह्म
णस्यनग्यग्रोधः क्षत्रियस्यवाऔदुंबरोवावैश्यस्यकृष्णाजिनमुत्तरीयंब्राह्मणस्यरोरवंक्षत्रियस्यगव्यंवस्ताजिनंवैश्यस्यशणकुमा
हतंवासोब्राह्मणस्यमांजिष्ठंक्षत्रियस्यहारिद्रंकौशेयंवैश्यस्यसर्वेषांवातान्तवमरक्तं भवेत् पूर्वांब्राह्मणोभिक्षांयाचेत भवन्मध्यं
राजन्योभवद् न्त्यांवैश्यस्य आषोडशाद्ब्राह्मणस्यानतीतः कालआद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्यातऊर्ध्वंपतितसावि
त्रीकाभवंति नैनानुपनयेन्नाध्यापयेन्नयाजयेन्नेभिर्विवाहयेयुः पतितसावित्रीकउद्दालकव्रतंचरेत् द्वौमासौ यावकेनवर्तये
न्मासंमाक्षिकेनाष्टरात्रंघृतेनषड्रात्रमयाचितंत्रिरात्रमब्भक्षोऽहोरात्रमेवोपवासं अश्वमेधावभृथंगच्छेद्व्रात्यस्तोमेनवायजे
त इतिवाशिष्ठेधर्मशास्त्रेएकादशोऽध्यायः ११ अथातःस्नातकव्रतानि सनकिंचिद्याचेतान्यत्रराजांतेवासिभ्यः क्षुधापरी
तस्तुकिंचिदेवयाचेत कृतमकृतंवाक्षेत्रंगामजाविकंसन्ततंहिरण्यंधान्यमन्नंवानतुस्नातकः क्षुधावसीदेदित्युपदेशोननग्नांस
सहसासंविशेन्न रजस्वलायामयोग्यायांनकुलंकुलंस्याद्वत्संतींविततांन्नातिक्रामेन्नोद्यंतमादित्यंपश्येन्नादित्यंन्तपन्तंनास्तंमू
त्रपुरीषेकुर्यान्ननिष्ठीवेतपरिवेष्टितशिराभूमिमयज्ञियैस्तृणैरन्तर्धाय मूत्रपुरीषेकुर्यादुदङ्मुखश्चाहनिनक्तंदक्षिणामुखः
संध्यामासीतोत्तरामुदाहरंतिस्नातकानांतुनित्यंस्यादन्तर्वासस्तथोत्तरंयज्ञोपवीतेद्वेयष्टिःसोदकश्चकमंडलुः अप्सुपाणौचका

ष्टेनकथितंपावकंशफचिंतस्मादुदकपाणिभ्यांपरिमृज्यात् कमंडलुं पर्यग्निकरणंत्वेतन्मनुराह प्रजापतिः कृत्वाचावश्यकार्य्याणिआ
चामेच्छौचविहितइतिप्राङ्मुखोऽन्नानिभुंजीत तूष्णींसांगुष्ठंकृत्स्नग्रासंग्रसेतनचमुखशब्दंकुर्यादृतुकालाभिगामीस्यात् पर्ववर्जं
स्वदारेष्वातीर्थमुपेयादथाप्युदाहरंति यस्तुपाणिगृहीतायाआस्येकुर्वीतमैथुनं भवंतिपितरस्तस्यतन्मासंरेतसोभुजः यस्याद
नतिचारेणरतिसाधर्म्यसंश्रिता अपिचपावकोऽपिज्ञायते अद्यश्वोवाविजनिष्यमाणाः पतिभिःसहशयंतइतिस्त्रीणामिं
द्रदत्तोवरः नन्नवृक्षमारोहेन्नकूपमवरोहेन्नाग्निंमुखेनोपधमेन्नाग्निंब्राह्मणंचान्तरेणव्यपेयान्नाग्नी ब्राह्मणयोरनुज्ञाप्यवा
भार्य्ययासहनाश्नीयादवीर्य्यवदपत्यंभवतीति वाजसनेयकेविज्ञायतेनेन्द्रधनुर्नाम्नानिर्दिशेन्मणिधनुरितिब्रूयात् पालाश
मासनंपादुकेदंतधावनमितिवर्जयेत् नोत्संगेभक्षयेदधोनभुंजीतवैणवम् दंडंधारयेद्रुक्मेकुंडलेच नवहिर्मालांधारयेदन्यत्र
रुक्ममय्याः सभासमवायांश्चवर्जयेत् अथाप्युदाहरन्ति अप्रामाण्यंचवेदानामार्षाणांचैवदर्शनं अव्यवस्थाचसर्वत्रएत
न्नाशनमात्मनइति नानाहूतोयज्ञंगच्छेद्यदिव्रजेदधिवृक्षसूर्यमध्वानंनप्रतिपद्यते नावंचसांशयिकींबाहुभ्यांननदींतरेदु
त्थायापररात्रमधीत्यनपुनःप्रतिसंविशेत् प्राजापत्येमुहूर्त्तेब्राह्मणः स्वनियमाननुतिष्ठदनुतिष्ठेदिति इतिवाशिष्ठेधर्मशास्त्रे
द्वादशोऽध्यायः १२ अथातःस्वाध्यायस्योपाकर्मश्रावण्यांपौर्णमास्यांप्रोष्ठपद्यांवाग्निमुपसमाधायकृताधानोजुहोतिदेवेभ्य

श्छन्दोभ्यश्चेति ॥ ब्राह्मणान्स्वस्तिवाच्यदधिप्राश्य ततउपाकर्मकुर्वीत अर्धपंचममासानर्द्धषष्ठान्तऊर्ध्वंशुक्लपक्षेष्वधीयीत् कामं
तुवेदांगानि तस्यानध्यायाः संध्यास्तमितस्सुस्तत्रशवेदिवाकीर्त्येनगरेषुकामंगोमयपर्युषितेपरिलिखितेवाश्मशानान्तेश
यानस्यश्चाह्निकस्यमानवंचात्रश्लोकमुदाहरन्ति फलान्याम्पस्तिलान्भक्ष्यमथान्यच्छ्राद्धिकंभवेत् प्रतिगृह्याप्यनध्यायः
पाण्यास्याब्राह्मणाः स्मृताइतिधातवः पूतिगंधिप्रसृतेरितवृक्षमारूढस्यनाविसेनायांचभुक्त्वाचार्द्रपाणिबाणशब्देचतुर्द
श्याममावास्यायामष्टम्यामष्टकासुप्रसारितपादोपस्थस्याश्रितस्यगुरुसमीपेमिथुनव्यपेतायांवाससामिथुनव्यपेतेन
निर्मुक्तेनग्रामान्ते छर्दितस्यसूत्रितस्योच्चारितस्ययजुषांचसायंशब्देवाजीर्णेनिर्घातभूमिचलनचंद्रसूर्योपरागेषु दिङ्नादपर्व
तनादकंपप्रपातेषूपलरुधिरपांशुवर्षेराकालिकं उल्काविद्युतराज्योतिषमपर्त्वाकालिकंवा आचार्येचप्रेतेत्रिरात्रमाचा
र्यपुत्रशिष्यभार्यास्वहोरात्रमृत्विग्योनिसंबंधेषुचगुरोः पादोपसंग्रहणंकार्यमृत्विक्श्वशुरपितृव्यमातुलानवरवय
सः प्रत्युत्थायाभिवदेद्येचैवपादग्राह्यास्तेषांभार्यागुरोश्चमातापितरौयौविद्यादभिवन्दितुमहमयंभोरितिब्रूयाद्यश्चनवि
द्यात् प्रत्यभिवादेनाभिवदेत् पतितःपितापरित्याज्योमातातुपुत्रेनपतति अथाप्युदाहरन्ति उपाध्यायाद्दशाचार्यआचार्या
णांशतंपिता पितुर्दशशतंमातागौरवेणातिरिच्यते भार्याःपुत्राश्चशिष्याश्चसंस्पृष्टाःपापकर्मभिः परिभाष्यपरित्याज्याः

पतितोयोऽन्यथाभवेत् ऋत्विगाचार्यावयाजकानध्यापकौहेयावन्यत्रहानात् पतितोनान्यत्रपतितोभवतीत्याहुरन्यत्रस्त्रियाः
साहिपरगामितानङ्गिन्नामसक्षूण्णासुपेयात् गुरोर्गुरौसन्निहितेगुरुवद्वृत्तिरिष्यते गुरुवद्गुरुपुत्रस्यवर्तितव्यमितिश्रुतिः शास्त्रं
वस्त्रंतथान्नानिप्रतिग्राह्याणि ब्राह्मणस्यविद्याविजयजः संबन्धः कर्मचमान्यंपूर्वः पूर्वोगरीयान्स्थविरबालातुरभारिकच
ऋवतापंथाः समागमेपरस्मैदेयोराजस्नातकयोः समागमेराज्ञास्मात्कायदेयः सर्वैरेववाउच्चतमायतृणभूम्यग्न्युदकवाकु
सूनृतानसूयाः सप्तगृहेनोच्छिद्यन्तेकदाचनकदाचनेति इतिवाशिष्ठधर्मशास्त्रेत्रयोदशोध्यायः १३ अथातोभोज्या
भोज्यंचवर्णयिष्यामः चिकित्सकमृगयुपुंश्चलीदंडिकस्तेनाभिशस्तषंडपतितानामभोज्यंकदर्य्येक्षितवद्धातुरसोमवि
क्रयीतक्षकरजकशौण्डिकसूचकवार्ड्डुषिकचर्मावकृन्तानांशूद्रस्यचायज्ञस्योपयज्ञेयश्चोपपतिंमन्यतेयश्चगृहीततद्धतुर्य
श्चवधार्हेनापहन्यात् कोबंधेमाक्षोइतिचाभिक्रुश्येत् गणान्नंगणिकान्नमथाप्युदाहरन्तिनाश्नंतिश्वपतेर्देवानाश्नंतिवृ
षलीपतेः भार्याजितस्यनाश्नंतियस्यचापपतिर्गृहेइति एधोदकसवत्सकुशलाभ्युद्यतपानावसथसफरिप्रियंगुस्तरज
मधुमांसानिनैतेषांप्रतिगृण्हीयादथाप्युदाहरन्तिगुर्वर्थदारसुजिहीषन्नर्चिष्यन् देवतातिथीन् सर्वतःप्रतिगृण्हीयान्नतुवृ
प्येत् स्वयंततइतिनमृगयोरिषुचारिणः परिवर्ज्यमन्नंविज्ञायते ह्यगस्त्योवर्षसाहस्रिकेसत्रेमृगयांचचारतस्यासंस्तुरसम

याःपुरोडाशाम्मृगपक्षिणांप्रशस्तानामपित्स्यन्नंप्राजापत्यान्तुश्लोकानुदाहरन्ति उद्यतामाहृतांभिक्षांपुरस्तादप्रचोदितां भोज्यं
प्रजापतिर्मेनेअपिदुष्कृतकारिणः श्रद्दधानैर्नभोक्तव्यंचौरस्यापिविशेषतः नत्वेवबहुधातस्ययावानतद्द्दताभवेत् नतस्यपित
रो:श्नंतिदशवर्षाणिपञ्चच नचहव्यंवहत्यग्निर्यस्तामभ्यवमन्यते चिकित्सकस्यमृगयोःशल्यहस्तस्यपाशिनः षंढस्यकुलटाया
श्चउद्यतापिनगृह्यतइति उच्छिष्टमगुरोरभोज्यंस्वमुच्छिष्टं मुच्छिष्टोपहतंचयदशनंकेशकीटोपहतंच. कामंतुकेशकीटानुद्धृत्य
द्भिःप्रोक्ष्यभस्मनावकीर्य्यवाचाचप्रशस्तमुपभुंजीतापित्स्यन्नंप्राजापत्यान्श्लोकानुदाहरन्ति त्रीणिदेवाःपवित्राणिब्राह्मणा
नामकल्पयन् अदृष्टमद्भिर्निर्णिक्तंयच्चवाचाप्रशस्यते देवद्रोण्यांविवाहेषुयज्ञेषुप्रकृतेषुच काकैःश्वभिश्चसंस्पृष्टमन्नंतन्न
विसर्जयेत् तस्मात्तदन्नमुद्धृत्यशेषंसंस्कारमर्हति द्रवाणांप्लावनेनैवघनानांक्षरणेनतु पाकेनमुखसंस्पृष्टंशुचिरेवहितङ्भवेत्
अन्नपर्युषितभावदुष्टंहल्लेखनंपुनः सिद्धमाममृजीसपक्वंचकामंतुदध्याद्घृतेनचाभिघारितमुपभुंजीतापित्स्यन्नं प्राजा
पत्यान्श्लोकानुदाहरन्ति हस्तदत्तास्तुयेस्नेहालवणव्यंजनानिच दातारंनोपतिष्ठंतिभोक्ताभुंक्तेचकिल्बिषमिति १ लशुन
पलांडुकेसुकगृंजनश्लेष्मांतवृक्षनिर्यासलोहितानश्वनाश्वश्वकाकावलीढं शूद्रोच्छिष्टभोजनेषुकृच्छ्रातिकृच्छ्रइतरे १ प्यन्य
त्रमधुमांसफलवकर्षेष्वग्राम्यपशवविषयःसंधिनीक्षीर वत् साक्षीरंगोमहिष्यजातरोमानिर्दशाहानामनामन्त्र्य नाव्युदकम

पूपधानाकरंभसक्तुचरकतैलपायसशाकानिलशक्तानिवर्जयेदन्यांश्चक्षीरयवपिष्टवीरान् श्वाविच्छल्लकशशकच्छपगोधाः पंचनखानाभक्ष्याः अनुष्ट्राः पशूनामन्यतोदन्तश्चमत्स्यानांवाव हगवयशिशुमारनक्रकुलीराविकृतरूपाः सर्पशीर्षाश्चगौरव यशलभाश्चानुद्दिष्टास्तथा धेन्वनडुहौमेध्यौवाजसनेयने खड्गेतुविवदंत्यग्राम्यशूकरेच शकुनानांचविशर्विविष्किरजाल पादाः कलविङ्कप्लवहंसचक्रवाकभासमद्गुटिट्टिभाटबांधनक्तंचरादार्वाधाटाश्चटकरैलातकहारीत् खंजरीटग्राम्यकुक्कुटशु कसारिका कोकिलक्रव्यादाग्रामाचारिणश्चग्रामाचारिणश्चेति इतिवाशिष्ठधर्मशास्त्रेचतुर्दशोऽध्यायः १४

शोणितशुक्रसंभवः पुरुषोमातापितृनिमित्तकः तस्यप्रदानविक्रयत्यागेषुमातापितरौप्रभवतः नत्वेकंपुत्रंदद्यात् प्रतिगृ ण्हीयाद्वासहिसंतानायपूर्वेषां नस्त्रीदद्यात् प्रतिगृण्हीयाद्वान्यत्रानुज्ञानाद्भर्तुः पुत्रंप्रतिगृहीष्यन्बंधूनाहूय राजनिचावे द्यनिवेशनस्य मध्येव्याहृतीर्हुत्वादूरबांधवमसन्निकृष्टमेव संदेहेचोत्पन्नेदूरेबांधवंशूद्रमिवस्थापयेत् विज्ञायतेह्येकेनब हूंस्त्रायतइति तस्मिंश्चेत् प्रतिगृहीतेऔरसः पुत्रउत्पद्यतेचतुर्थभागभागीस्यात् यदिनाभ्युदयिकेषुयुक्तः स्याद्वेदविप्लाविनः सव्येनपादेनप्रवृत्ताग्रान्दर्भान् लोहितान्वोपस्तीर्यपूर्णपात्रमस्मैनिनयेन्निनेतारंचास्यप्रकीर्यकेशान्ज्ञातयोऽन्वारभेरन्न पसव्यंकृत्वागृहेषुस्वैरमापाद्येरन्नतऊर्ध्वंतेनसहधर्मंमीयुस्तद्धर्माणस्तद्धर्मापन्नाः पतितानांतुचरितव्रतानांप्रत्युद्धारोऽथाप्यु

दाहरन्ति अग्न्यभ्युद्धरतां गच्छेत् क्रीडंतिच हसंतिच यश्चोत् पातयतां गच्छेच्छौचनित्याचार्य्यमातृपितृहंतारस्तत् प्रसादाङ्ग
याद्वा एषाप्रत्यापत्तिः पूर्णादात् प्रव्रजाद्वाकांचनंमम् त्वंमाहेयुंवापूरयित्वापोहिष्ठाभिरेव षड्भिर्ऋग्भिः सर्वत्रवाभिरिक्तस्यप्रत्युद्धार
पुत्रजन्मनाव्याख्यातः इतिश्रीवाशिष्ठधर्मशास्त्रेपंचदशोऽध्यायः १५ अथव्यवहाराः राजमंत्रीसदः कार्य्याणिकुर्य्या
द्वयोर्विवदमानयोरत्रपक्षांतरंगच्छेद्यथासनमपराधोत्ध्यंतेनापराधः समः सर्वेषु भूतेषुयथासनमपराधोत्ध्याद्यवर्णयोर्विधानतः
सपन्नतामाचरेत् राज बालानामृणाप्त व्यवहाराणांप्राप्तकालेतुतद्वत् लिखितंसाक्षिणोभुक्तिः प्रमाणंत्रिविधंस्मृतं धनस्वीकर
णंपूर्वंधनीधनमवाप्नुयादितिमार्गक्षेत्रयोर्विसर्गेत्थापरिवर्तनेन ऋणाग्रहे त्वर्थांतरेषुत्रिपादमात्रं गृहक्षेत्रविरोधेसामंतप्रत्ययः
सामंतविरोधः पिलख्यप्रत्ययः प्रत्यभिलख्यविरोधेग्रामनगरवृद्धश्रेणिप्रत्ययाः थाप्युदाहरंति यएकंक्रीतमाधेयमन्वाधेयंप्र
तिग्रहं यज्ञादुपगमोवाणेस्तथाधूमशिखात्ध्यमीइति तत्रभुक्तदशवर्षमेवोदाहरंति आधिःसीमाधिकंचैवनिक्षेपोपनिधिः
स्त्रियः राजस्वंश्रोत्रियद्रव्यंनराज्ञादातुमर्हतीति तच्चसंभोगेनग्रहितव्यं गृहिणोद्रव्याणिगजगामीनिभवंति तथाराजामंत्रि
भिः सहनागरैश्चकार्य्याणिकुर्य्यादसौवाराजाश्रेयान् वसुपरिवारः स्यादगृध्रपरिवारंवाराजाश्रेयान् गृध्रपरिवारः स्यान्नगृध्रो
गृध्रपरिवारःस्यात् परिवाराद्दोषाः प्रादुर्भवंतिस्तेयहारविनाशनंतस्मात् पूर्वमेवपरिवारंपृच्छेत् अथसाक्षिणः श्रोत्रियोरूप

वान् शीलवान् पुण्यवान् सत्यवान् साक्षिणः सर्वे एव वा स्त्रीणां तु साक्षिणः स्त्रियः कुर्यात् द्विजानां सदृशा द्विजाः शूद्राणां संतः
शूद्राश्च अंत्यानामंत्याः अथाप्युदाहरंति प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत् दंडशुल्कावशिष्टं च न पुत्रो दातुमर्हतीति ब्रूहि सा
क्षिन्यथातत्त्वं लंबंते पितरस्तव तव वाक्यमुदीर्यंत मुत्पतंति पतंति च नग्नो मुंडः कपाली च भिक्षार्थी क्षुत्पिपासितः अंधः शत्रुकुलं
गच्छेद्यस्तु साक्ष्यमनृतं वदेत् पंचकन्यानृते हंति दश हंति गवानृते शतमश्वानृते हंति सहस्रं पुरुषानृते व्यवहारे मृते दारे प्रायश्चि
त्ते कुले स्त्रियः तेषां पूर्वपरिच्छेदाच्छेद्यं ते वाय वादिभिः उद्वाहकाले रतिसंप्रयोगे प्राणात्यये सर्वधनापहारे विप्रस्य चार्थे अनृ
तं वदेयुः पंचानृतान्याहुरपातकानि स्वजनस्यार्थे यदि वार्थहेतोः पक्षाश्रयेणैव वदंति कार्य्यं वे शब्दवादं स्वकुलानुपूर्वान् स्वर्ग
स्थितानपि पातयंत्यपि इति वाशिष्ठे धर्मशास्त्रे षोडशोऽध्यायः १६ ऋणमस्मिन् सन्नयति अमृतत्वं च गच्छति पिता पुत्रस्य जा
तस्य पश्येच्च जीवतो मुखं अनंताः पुत्रिणां लोका नापुत्रस्य लोकोऽस्तीति श्रूयते प्रजाः संत्पुत्रिण इत्यपि शापः प्रजाभिरग्ने स्वमृत
त्वमस्यामित्यपि नियमो भवति पुत्रेण लोकान् जयति पौत्रेणानंत्यमश्नुते अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोतिनि रयमिति क्षेत्रिणः
पुत्रो जनयितुः पुत्र इति विवदंते तत्रोभयथाप्युदाहरन्ति यद्यन्य गोषु वृषभो वत्सानूजनयते स्कृतान् गोमिनामेव ते वत्सा मोघं स्यंदन्
माक्षणमिति अप्रमत्ता रक्षतु वेनं मा च क्षेत्रे परे जीजानिवासो जनयितुः पुत्रोऽयतिसंपरायामोघं रेतोऽकुरुत तंतुमेतमिति बहूनामे

कजातानामेकश्चेत् पुत्रवान्नरः सर्वेतेतेनपुत्रेणपुत्रवंतइतिश्रुतिः बव्हीनांद्वादशत्येवपुत्राः पुराणदृष्टाः स्वयमुत्पादितः स्वक्षेत्रेसं
स्कृतायांप्रथमः तदलाभेनियुक्तायांक्षेत्रजोद्वितीयः तृतीयःपुत्रिकाविज्ञायते अभ्रातृकापुंसःपितॄनभ्येति प्रतीचीनंगच्छतिपुत्र
त्वं श्लोकः अभ्रातृकांप्रदास्यामितुभ्यंकन्यामलंकृतां अस्यांयोजायतेपुत्रःसमेपुत्रोभवेदिति पौनर्भवश्चतुर्थः पुनर्भूःकौमारं
भर्तारमुत्सृज्यान्यैःसहचरित्वातस्यैवकुटुंबमाश्रयति सापुनर्भूर्भवति याचक्लीबंपतितमुन्मत्तंवा भर्तारमुत्सृज्यान्यंपतिंविन्दते
मृतेवासापुनर्भूर्भवति कानीनःपंचमोयांपितृगृहे संस्कृताकामादुत्पादयेन्मातामहस्यपुत्रोभवतीत्याहुः अथाप्युदाहरन्ति अप्र
त्तादुहितायस्यपुत्रंविन्दतितुल्यतः पुत्रीमातामहस्तेनदद्यात्पिंडंहरेद्धनमिति गूढेचगूढोत्पन्नःषष्ठइत्येते दायादाबांधवास्त्राता
रोमहतोभयादित्याहुः अथादायादास्तत्रसहोढएवप्रथमोयागर्भिणीसंस्क्रियतेतस्यांजातःसहोढःपुत्रोभवति दत्तकोद्वितीयो
यंमातापितरौदद्यातां क्रीतस्तृतीयस्तच्छुनःशेपेनव्याख्यातं हरिश्चंद्रोहवैराजासोजीगर्तस्यसौयवसेःपुत्रंविक्रीयस्वयंक्री
तवान् स्वयमुपागतश्चतुर्थः तच्छुनःशेपेनव्याख्यातंशुनःशेपोहवैयूपेनियुक्तोदेवतास्तुष्टावतस्येहदेवताः पाशंविमुमुचुस्त
मृत्विजऊचुर्ममैवायंपुत्रोऽस्त्विति तान्नाहसंपेदेतेसंपादयामासुरेषएवयंकामयेत तस्यपुत्रोस्त्विति तस्येहविश्वामित्रोहो
तासीत्तस्यपुत्रत्वमियाय अपविद्धःपंचमोयंमातापितृभ्यामपास्तंप्रतिगृह्णीयात् शूद्रापुत्रएवषष्ठोभवतीत्याहुरित्येतेदायादाबांध

वाः अथाप्युदाहरन्ति यस्यपूर्वेषांवर्णानांनकश्चिद्दायादः स्यादेतेतस्यापहरंति अथभ्रातृणांदायविभागो द्व्यंशंज्येष्ठोहरेद्गवाश्वस्य
चानुसदृशमजावयोगृहंच कनिष्ठस्यकाष्ठंगांयवसंगृहोपकरणानिच मध्यमस्यमातुःपारिणेयंस्त्रियोविभजेरन् यदिब्राह्मणस्यब्रा
ह्मणीक्षत्रियावैश्यासुपुत्राःस्युस्त्र्यंशंब्राह्मण्याःपुत्रोहरेत् द्व्यंशंराजन्यायाःपुत्रःसममितरेविभजेरन्नन्येनचैषांस्वयमुत्पादित
स्याद्व्यंशमेवहरेदन्येष्वांन्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्चभरणं क्लीबोन्मत्तानांप्रेतपत्नीपरामासंव्रतचारिण्यःक्षारलवणंभुं
जानाः शयीतोर्द्ध्वंषड्भ्योमासेभ्यःस्नात्वाश्राद्धंचपत्येदत्वा विद्याकर्मगुरुर्योनिसंबंधात् सन्निपात्यपिताभ्रातावानियोगंकारयेत्त
पसेवोन्मत्तामवशांव्याधितांवानियुंज्यात् ज्यायसीमपिषोडशवर्षां नचेदामयाविनीस्यात् प्राजापत्येमुहूर्तेपाणिग्रहणवदुप
चारोऽन्यत्रसंस्थाप्यवाक्पारुष्याद्दंडपारुष्याच्चग्रासाच्छादनस्नानलेपनेषुप्रागयामिनीस्यादनियुक्तायामुत्पन्नउत्पादयितुः
पुत्रोभवतीत्याहुःस्याच्चेन्नियोगिनोदृष्टालोभान्नास्तिनियोगःप्रायश्चित्तंवाप्युपनियुंज्यादित्येके कुमार्यृतुमतीत्रिवर्षाण्युपा
सीतोर्द्ध्वं त्रिभ्योवर्षेभ्यःपतिंविंदेत्तुल्यं अथाप्युदाहरंति पितुःप्रदानात्तुयदाहिपूर्वंकन्यावयोयःसमतीत्यदीयते साहंतिदातारम
पीक्षमाणाकालातिरिक्तागुरुदक्षिणेव प्रयच्छेन्नग्निकांकन्यांऋतुकालभयात्पिता ऋतुमत्यांहितिष्ठंत्यांदोषःपितरमृच्छति
यावच्चकन्यामृतवःस्पृशंतितुल्यैःसकामामभियाच्यमानां भ्रूणानितावंतिहतानिताभ्यांमातापितृभ्यामितिधर्मवादः अद्भि

र्यैवाचदत्तायांम्रियेताथोवरोयदि नचमंत्रोपनीतास्यात्कुमारीपितुरेवसा यावच्चेदाहृताकन्यामन्त्रैर्यदिनसंस्कृता
अन्यस्मैविधिवद्देयायथाकन्यातथैवसा पाणिग्रहेमृतेबालाकेवलंमन्त्रसंस्कृता साचेदक्षतयोनिःस्यात्पुनःसंस्कारमर्हती
ति प्रोषितपत्नीपंचवर्षाण्युपासीतऊर्ध्वंपंचभ्योवर्षेभ्यःपतिसकाशंगच्छेत् यदिधर्मार्थाभ्यांप्रवासंप्रत्यनुकामानस्यात् यथाप्रेतस्यएवंवर्तितव्यंस्यात् एवंपंचब्राह्मणीप्रजाताचत्वारिराजन्याप्रजातात्री
णिवैश्याप्रजाता द्वेशूद्राप्रजाता अतऊर्ध्वंसमानोदकपिंडजन्मर्षिगोत्राणांपूर्वःपूर्वोगरीयान् नखलुकुलीनेविद्यमाने परगामिः
स्यात् यस्यपूर्वेषांषण्णां नकश्चिद्दायादःस्यात् सपिंडाःपुत्रस्थानीयावातस्यधनंविभजेरंस्तेषामलाभे आचार्यान्तेवासिनौ
हरेयातांतयोरलाभेराजाहरेत् नतुब्राह्मणस्यराजाहरेद्ब्रह्मस्वंतुविषंघोरं नविषंविषमित्याहुर्ब्रह्मस्वंविषमुच्यते विषमेका
किनंहंतिब्रह्मस्वंपुत्रपौत्रकमिति त्रैविद्यसाधुभ्यःसंप्रयच्छेदिति इतिवाशिष्ठेधर्मशास्त्रेसप्तदशोऽध्यायः १७ शूद्रेणब्राह्म
ण्यामुत्पन्नश्चांडालोभवतीत्याहुः राजन्यायांवैश्यामन्त्यावसायी वैश्येनब्राह्मण्यामुत्पन्नोरामकोभवतीत्याहुः राजन्यायांपु
ल्कसः राजन्येनब्राह्मण्यामुत्पन्नःसूतोभवतीत्याहुः अथाप्युदाहरन्ति छिन्नोत्पन्नास्तुयेकेचित् प्रातिलोम्यगुणाश्रिताः गुणा
चारपरिभ्रंशात्कर्मभिस्तान् विजानीयुरिति एकान्तरद्व्यन्तरानुजाताब्राह्मणक्षत्रियवैश्यैरंबष्ठोग्रनिषादाभवंति शूद्रायांपा
रशवः पारयन्नेवजीवन्नेवशवोभवतीत्याहुः शवइतिमृताख्या एतच्छ्मशानंयच्छूद्रस्तस्माच्छूद्रसमीपेनाध्येतव्यं अथापियम

गीतान् श्लोकानुदाहरंति श्मशानमेतत्प्रत्यक्षं येशूद्राः पापचारिणः तस्माच्छूद्रसमीपेचनाध्येतव्यं कदाचन नशूद्रायमतिंदद्या
न्नोच्छिष्टंनहविष्कृतं नचास्योपदिशेद्धर्मं नचास्यव्रतमादिशेत् यश्चास्योपदिशेद्धर्मं यश्चास्यव्रतमादिशेत् सोऽसंवृतं तमोघोरं
सहतेन प्रपद्यत इतिव्रणद्वारेकृमिर्यस्यसंभवेत कदाचन प्राजापत्येनशुद्धेत हिरण्यंगोर्वासोदक्षिणेति नाग्निचित्परासुपेयात्
कृष्णवर्णायाः सरमायाइवनधर्मायनुधर्मायेति इतिवाशिष्ठेधर्मशास्त्रेऽष्टादशोऽध्यायः १८ धर्मोराज्ञःपालनंभूतानांतस्या
नुष्ठानात्सिद्धिः भयकारणंह्यपालनंवैएतत् सूत्रमाहुर्विद्वांसस्तस्माद्गार्हस्थ्यनैयमिकेषु पुरोहितोदद्याद्विज्ञायते ब्राह्मणःपु
रोहितोराष्ट्रंदधातीति तस्यभयमपालनादसामर्थ्याच्चदेशधर्मजातिधर्मकुलधर्मान्सर्वान् वैतानुप्रविश्य राजाचतुरोवर्णा
न् स्वधर्मेस्थापयेत्तेष्वधर्मपरेषुदंडं तु देशकालधर्माधर्मवयोविद्यास्थानविशेषैर्दिशेत् आगमाद्दृष्टाभावात् पुष्पफलोगान्य
देयानि हिंस्यात् कार्षणाकरणार्थंचोपहत्यागार्हस्थ्यंगांचमानोन्मानेरक्षितेस्यातां अधिष्ठानान्नोनीहारसार्थानामस्मान्न
मूल्यमात्रंनैहारिकंस्यान्महामहस्थःस्यात् संमानयेदवाहवाहनीयद्विगुणकारिणीस्यात् प्रत्येकंप्रयास्यःपुमान् शतंवाराद्ध
वातदेप्यर्थाःस्त्रियःस्युः कराष्टौमानाधारमध्यम पादःकार्षापणस्यनिरुक्तत्तरोमानाकरः श्रोत्रियोराजपुमानथप्रव्रजित
बालवृद्धतरुणप्रदातप्रागामिकाः कुमार्योमृतपत्यश्चबाहुभ्यामुत्तरंशतगुणंदद्यान्नदीकक्षवनशैलोपभोगानिष्कराःस्युस्त

दुपजीविनोवादद्यः प्रतिमाससमुद्वाहकैरस्त्वागमयेद्राजानिचमेतेदद्यात् प्रासंगिकंतेनमातृवृत्तिर्व्याख्याता राजमहिष्याः
पितृव्यमातुलाशराजापितृव्यान्राजाबिभृयात्तद्गामित्वादंशस्यस्युः तद्वंध्रश्चान्याश्चराजपत्न्योयासाच्छादनंलभेरन् अनिच्छं
तोवाप्रव्रजेरन् क्लीबोन्मत्तोशवापि मानवंश्लोकमुदाहरन्ति नारिक्तकार्षापणमस्ति शुल्कंनशिल्पवृत्तौनशिशौनधर्मे नभै
क्ष्यवृत्तौनहृतावशेषे नश्रोत्रियप्रव्रजितेनयज्ञेइतिस्तेनाभिशस्तदुष्टशस्त्रधारिसहोढव्रणसंपन्नव्यपविष्टेष्वेकेषांदंडोत्सर्गे
राजैकरात्रमुपवसेत् त्रिरात्रंपुरोहितः कृच्छ्रमदंड्यदंडनेपुरोहितस्त्रिरात्रंवा अथाप्युदाहरंति अन्नादेभ्रूणहामार्ष्टिपत्यौभा
र्यापचारिणी गुरौशिष्यश्चयाज्यश्चस्तेनोराजनिकिल्बिषं राजभिर्धृतदंडास्तुकृत्वापापानिमानवाः निर्मलाःस्वर्गमायां
तिसंतःसुकृतिनोयथा एनोराजानमृच्छत्युत्सृजंतंसकिल्बिषं तंचेन्नघातयेद्राजाराजधर्मेणदुष्यतीति राज्ञामन्येषुकार्ये
षुसद्यःशौचंविधीयते तथातान्यपिनित्यानिकालएवात्रकारणमिति यमगीतंचश्लोकमुदाहरन्ति नात्रदोषोऽस्तिराज्ञांवै
व्रतिनांनचमंत्रिणां ऐंद्रस्थानमुपासीनाब्रह्मभूताहितेसदेति इतिवाशिष्ठधर्मशास्त्रेएकोनविंशोऽध्यायः१९ अनभिसं
धिकृतेप्रायश्चित्तमपराधेसविकृतेऽप्येके गुरुरात्मवतांशास्ताराजाशास्तादुरात्मनां इहप्रच्छन्नपापानांशास्तावैवस्वतोय
मइति तत्रचसूर्याभ्युदयितःसन्नहस्तिष्ठेत्सावित्रींचजपेदेवंसूर्याभिनिर्मुक्तोरात्र्यावासीत् कुनखीश्यावदंतस्तु कृच्छ्रंद्वादशरात्रं

चरित्वापुनर्निर्विशेत् अथदिधिषूपतिः कृच्छ्रंद्वादशरात्रंचरित्वानिर्विशेत् तांचैवोपयच्छेद्दिधिषूपतिः कृच्छ्रातिकृच्छ्रौचरि
त्वानिर्विशेत् चरणमहरहस्तद्वक्ष्यामोब्रह्मघ्नः कृच्छ्रंद्वादशरात्रंचरित्वापुनरुपनीतोवेदमाचार्य्यात् गुरुतल्पगः सवृषणंशि
श्नमुत्कृत्यांजलावाधाय दक्षिणामुखोगच्छेत् यत्रैवप्रतिहन्यात्तत्रतिष्ठेदाप्रलयान्निष्कालकोवा घृताक्तस्तप्तांसूर्मिंपरिष्वजे
न्मरणान्मुक्तोभवतीतिविज्ञायते आचार्य्यपुत्रशिष्यभार्य्यासुचैवंयोनिषुच गुर्वीसखींगुरुसखींचपतितांचगत्वा कृच्छ्राब्दं
चरेत् एतदेवचांडालपतितान्न भोजनेषुततःपुनरुपनयनंवपनादीनांतुनिवृत्तिः मानवंचात्रश्लोकमुदाहरन्ति वपनंमेखलादं
डोभैक्षचर्य्याव्रतानिच निवर्त्तन्तेद्विजातीनांपुनःसंस्कारकर्मणीति मद्यपानेक्लीबव्यवहारेषुचैवं मद्यभांडेस्थिताआपोयदिकश्चि
द्द्विजोऽर्थवृत् पद्मोदुंबरबिल्वपलाशानामुदकंपीत्वा त्रिरात्रेणैवशुध्यति अभ्यासेतुसुरायाअग्निवर्णांतांद्विजःपिबेत् भ्रूणह
नंचवक्ष्यामोब्राह्मणंहत्वाभ्रूणहाभवत्यविज्ञातंच गर्भंअविज्ञाताहिगर्भाःपुमांसोभवंति तस्मात्पुंस्कृत्यजुहुयात् लोमा
निमृत्योर्जुहोमि लोमभिर्मृत्युंवासयइति प्रथमांत्वचंमृत्योर्जुहोमि त्वचामृत्युंवासयइति द्वितीयंलोहितंमृत्योर्जुहोमि लोहि
तेनमृत्युंवासयइति तृतीयांत्वचंमृत्योर्जुहोमितावति मृत्युंवासयइति चतुर्थींमांसानिमृत्योर्जुहोमि मांसैर्मृत्युंवासयइति
पंचमींमेदंनमृत्युर्जुहोमि मेदसामृत्युंवासयइति षष्ठीमस्थीनिमृत्योर्जुहोमि अस्थिभिर्मृत्युंवासयइति सप्तमींमज्जानंमृ

त्योर्जुहोमि मज्जाभिर्मृत्युंवासयइति अष्टमींराजार्थेब्राह्मणार्थेवासंग्रामेऽभिमुखमात्मानंघातयेत् त्रिरंजितोवापराधः पूतोभव
तीतिविज्ञायते द्विरुक्तंकृतः कनीयोभवतीति तदप्युदाहरन्ति पतितंपतितंत्यक्त्वाचोरंचोरेतिवापुनः वचसातुल्यदोषःस्या-
न्मिथ्यादोषतांव्रजेदिति एवंराजन्यंहत्वाष्टौवर्षाणिचरेत् षड्वैश्यंत्रीणिशूद्रंब्राह्मणींचात्रेयींहत्वासवनगतौचराजन्यवैश्यौचा
त्रेयींवक्ष्यामोरजस्वलां ऋतुस्नातामात्रेयीमाहुः अत्रेत्येषामपत्यंभवतीतिचात्रेयी राजन्यहिंसायांवैश्यहिंसायांशूद्रंहत्वासंव
त्सरं ब्राह्मणसुवर्णहरणात् प्रकीर्य्यकेशान् राजानमभिधावेत् स्तेनोऽस्मिभोःशास्तुभवानितितस्मैराजौदुंबरंशस्त्रंदद्यात्ते
नात्मानंप्रमापयेन्मरणात् पूतोभवतीतिविज्ञायते निष्कालकोवा घृताक्तोगोमयाग्निनापादप्रभृत्यात्मानमभिदाहयेन्मरणात्
पूतोभवतीतिविज्ञायते अथाप्युदाहरन्ति पुराकालात् प्रमीतानामानाकविधिकर्मणा पुनरापन्नदेहानामंगंभवतितच्छृणु
स्तेनःकुनखीभवति श्वित्रीभवतिब्रह्महासुरापःश्यावदंतस्तुदुश्चर्मागुरुतल्पगइति पतितैःसंप्रयोगेचब्राह्मेणवायौनेनवा
तेभ्यःसकाशान्मात्राउपलब्धास्तासांपरित्यागस्तैश्चनसंवसेदुदीचींदिशंगत्वाऽनश्नन्संहिताध्ययनमधीयानः पूतोभवतीति
विज्ञायते अथाप्युदाहरन्ति शरीरपातनाच्चैवतपसाध्ययनेनच मुच्यतेपापकृत्पापाद्दानाच्चापिप्रमुच्यतइति विज्ञायते
इतिवाशिष्ठेधर्मशास्त्रेविंशतितमोऽध्यायः २० शूद्रश्चेद्ब्राह्मणीमभिगच्छेद्वीरणैर्वेष्टयित्वाशूद्रमग्नौप्रास्येद्ब्राह्मण्याःशि

रसिवापनंकारयित्वा सर्पिषाभ्यज्य नग्नांखरमारोप्य महापथमनुव्राजयेत् पूताभवतीतिविज्ञायते वैश्यश्चेद्ब्राह्मणीमभिग
च्छेल्लोहिततदर्भैर्वेष्टयित्वा वैश्यमग्नौप्रास्येद्ब्राह्मण्याः शिरसिवापनंकारयित्वा सर्पिषाभ्यज्य नग्नांगौरथमारोप्य महापथम
नुसंव्राजयेत् पूताभवतीतिविज्ञायते राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौप्रास्येद्ब्राह्मण्याः शि
रोवापनंकारयित्वा सर्पिषाभ्यज्य नग्नांरक्तखरमारोप्य महापथमनुव्राजयेत् एवंवैश्योराजन्यायांशूद्रश्चराजन्यावैश्ययोर्म
नसाभर्तुरतिचारेत्रिरात्रं यावकंक्षीरंभुंजानाधः शयानात्रिरात्रमप्सुनिमग्नायाः सावित्र्यष्टशतेनशिरोभिर्वाजुहुयात् पू
ताभवतीतिविज्ञायते इतिवाशिष्ठेधर्मशास्त्रे एकविंशतितमोध्यायः २१ वाशिष्ठस्मृतिःसमाप्तेयम् ७



यह पुस्तक श्रीकृष्णात्मज गंगाविष्णु और मारवाडी शिवकरण रामरतन दरक इन्होनें मुंबईमें जगदीश्वरछापखानेमें छपवाया. संवत् १९३८
शके १८०३ वृष॰संवत्सर भाद्र॰

